# ॥ श्रीमङ्गलचण्डिकास्तोत्रं ॥

## अथ एकविंशाक्षरी महामन्त्रः

ॐ ह्रीं श्रीं क्लीं सर्वपूज्ये देवि देवी मङ्गलचण्डिके ऐं क्रूं फट् स्वाहा

## ध्यानम्

देवीं षोडशवर्षीयां रम्यां सुस्थिरयौवनाम् ।

सर्वरूपगुणाढ्याञ्च कोमलाङ्गीं मनोहराम् ॥

श्वेतचम्पकवर्णाभां चन्द्रकोटिसमप्रभाम् ।

वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम् ॥

बिभ्रतीं कबरीभारं मल्लिकामाल्यभूषितम् ।

बिम्बोष्टीं सुदतीं शुद्धां शरत्पद्मनिभाननाम् ॥

ईषद्धास्यप्रसन्नास्यां सुनीलोल्पललोचनाम् ।

जगद्धात्रीञ्च दात्रीञ्च सर्वेभ्यः सर्वसम्पदाम् ॥

संसारसागरे घोरे पीतरुपां वरां भजे ॥

# अथ स्तोत्रम्

## शङ्कर उवाच

रक्ष रक्ष जगन्मातर्देवि मङ्गलचण्डिके ।
संहर्त्रि विपदां राशेर्हर्षमङ्गलकारिके ॥१॥
हर्षमङ्गलदक्षे च हर्षमङ्गलचण्डिके ।
शुभे मङ्गलदक्षे च शुभमङ्गलचण्डिके ॥२॥
मङ्गले मङ्गलार्हे च सर्वमङ्गलमङ्गले ।
सतां मङ्गलदे देवि सर्वेषां मङ्गलालये ॥३॥
पूज्या मङ्गलवारे च मङ्गलाभीष्टदैवते ।
पूज्ये मङ्गलभूपस्य मनुवंशस्य सन्ततम् ॥४॥
मङ्गलाधिष्ठातृदेवि मङ्गलानां च मङ्गले ।
संसार मङ्गलाधारे मोक्षमङ्गलदायिनि ॥५॥
सारे च मङ्गलाधारे पारेत्वं सर्वकर्मणाम् ।
प्रतिमङ्गलवारे च पूज्ये त्वं मङ्गलप्रदे ॥६॥

# अथ फलश्रुतिः

देव्याश्च मङ्गलस्तोत्रं यः शृणोति समाहितः ।

तन्मङ्गलं भवेच्छश्वन्न भवेत् तदमङ्गलम् ॥७॥

प्रथमे पूजिता देवी शम्भुना सर्वमङ्गला ।

द्वितीये पूजिता देवी मङ्गलेन ग्रहेण च ॥८॥

तृतीये पूजिता भद्रा मङ्गलेन नृपेण च ।

चतुर्थे मङ्गले वारे सुन्दरीभिश्च पूजिता ।

पञ्चमे मङ्गलाकाङ्क्षैर्नरैर्मङ्गलचण्डिका ॥९॥

पूजिता प्रतिविश्वेषु विश्वेशैः पूजिता सदा ।

ततः सर्वत्र सम्पूज्य सा बभूव सुरेश्वरी ॥१०॥

देवादिभिश्च मुनिभिर्मनुभिर्मानवैर्मुने ।

देव्याश्च मङ्गलस्तोत्रं यः शृणोति समाहितः ॥११॥

तन्मङ्गलं भवेच्छश्वन्न भवेत्तदमङ्गलम् ।

वर्द्धन्ते तत्पुत्रपौत्रा मङ्गलं च दिने दिने ॥१२॥

॥ इति श्रीब्रह्मवैवर्तपुराणे प्रकृतिखण्डे मङ्गलचण्डिका स्तोत्रं सम्पूर्णम् ॥

# ॥ श्रीमङ्गलचण्डिकास्तोत्रं ॥

### अथ एकविंशाक्षरी महामन्त्रः

ॐ ह्रीं श्रीं क्लीं सर्वपूज्ये देवि देवी मङ्गलचण्डिके ऐं क्रूं फट् स्वाहा

### ध्यानम्

देवीं षोडशवर्षीयां रम्यां सुस्थिरयौवनाम् । सर्वरूपगुणाढ्याञ्च कोमलाङ्गीं मनोहराम् ॥

श्वेतचम्पकवर्णाभां चन्द्रकोटिसमप्रभाम् । वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम् ॥

बिभ्रतीं कबरीभारं मल्लिकामाल्यभूषितम् । बिम्बोष्टीं सुदतीं शुद्धां शरत्पद्मनिभाननाम् ॥

ईषद्धास्यप्रसन्नास्यां सुनीलोल्पललोचनाम् । जगद्धात्रीञ्च दात्रीञ्च सर्वेभ्यः सर्वसम्पदाम् ॥

संसारसागरे घोरे पीतरुपां वरां भजे ॥

## अथ स्तोत्रम्

### शङ्कर उवाच

रक्ष रक्ष जगन्मातर्देवि मङ्गलचण्डिके । संहर्त्रि विपदां राशेर्हर्षमङ्गलकारिके ॥१॥

हर्षमङ्गलदक्षे च हर्षमङ्गलचण्डिके । शुभे मङ्गलदक्षे च शुभमङ्गलचण्डिके ॥२॥

मङ्गले मङ्गलार्हे च सर्वमङ्गलमङ्गले । सतां मङ्गलदे देवि सर्वेषां मङ्गलालये ॥३॥

पूज्या मङ्गलवारे च मङ्गलाभीष्टदैवते । पूज्ये मङ्गलभूपस्य मनुवंशस्य सन्ततम् ॥४॥

मङ्गलाधिष्ठातृदेवि मङ्गलानां च मङ्गले । संसार मङ्गलाधारे मोक्षमङ्गलदायिनि ॥५॥

सारे च मङ्गलाधारे पारेत्वं सर्वकर्मणाम् । प्रतिमङ्गलवारे च पूज्ये त्वं मङ्गलप्रदे ॥६॥

### अथ फलश्रुतिः

देव्याश्च मङ्गलस्तोत्रं यः शृणोति समाहितः । तन्मङ्गलं भवेच्छश्वन्न भवेत् तदमङ्गलम् ॥७॥

प्रथमे पूजिता देवी शम्भुना सर्वमङ्गला । द्वितीये पूजिता देवी मङ्गलेन ग्रहेण च ॥८॥

तृतीये पूजिता भद्रा मङ्गलेन नृपेण च । चतुर्थे मङ्गले वारे सुन्दरीभिश्च पूजिता ।

पञ्चमे मङ्गलाकाङ्क्षैर्नरैर्मङ्गलचण्डिका ॥९॥

पूजिता प्रतिविश्वेषु विश्वेशैः पूजिता सदा । ततः सर्वत्र सम्पूज्य सा बभूव सुरेश्वरी ॥१०॥

देवादिभिश्च मुनिभिर्मनुभिर्मानवैर्मुने । देव्याश्च मङ्गलस्तोत्रं यः शृणोति समाहितः ॥११॥

तन्मङ्गलं भवेच्छश्वन्न भवेत्तदमङ्गलम् । वर्द्धन्ते तत्पुत्रपौत्रा मङ्गलं च दिने दिने ॥१२॥

॥ इति श्रीब्रह्मवैवर्तपुराणे प्रकृतिखण्डे मङ्गलचण्डिका स्तोत्रं सम्पूर्णम् ॥